ओ३म्

कविरत्नश्रीमदखिलानन्दशर्म्मप्रणीतम्

# दयानन्ददिग्विजयम्

## महाकाव्यम्

तत्कृतहिन्दी-भाषानुवादसमेतम्

तस्येदम्

प्रथमसंस्करणम्

तच्च

१९६७ वैक्रमाब्दे

*प्रयागस्थे "इण्डियन" यन्त्रालये*

मुद्रितम्



मूल्यं रूप्यकचतुष्टयम्

ओ३म्

# भूमिका

अयि सहृदयहृदयाः !!

अनावश्यकमेतत्प्रतीयते यदनेकवार साहित्यसुधासमुद्रे कृतावगाहेषु सरस्वतीहृदयभूतसारस्यसमुत्थितानेककाव्यालङ्कारालङ्कृतमानसेषु भवादृशेषु काव्यप्रयोजनकथनम्।

यतः किल—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥ १॥

इति मम्मटाचार्य्यप्रणीतकाव्यप्रकाशारम्भविन्यस्तकारिकयैव साङ्गोपाङ्गतया तत्प्रयोजनकथने चारिताथ्र्यमासादितम्।

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥ २॥

इति वदता साहित्यदर्पणकारेणापि न केवलं काव्यस्य कीर्तिप्रीतिजनकत्वमेव प्रतिपादितं प्रत्युतानेककलाकौशलसमुद्भावकस्यास्य धर्मार्थकाममोक्षादिषु विचक्षणतामूलकत्वमप्युररीकृतमेव। अतएव—

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेवेति सुतरां दर्पणे प्रतिपादितम्॥ ३॥

परमधुनैतद्विचारणीयमस्ति पूर्वैरविचारितपूर्वं काव्यस्य साधुत्वं यतः "साधुकाव्यनिषेवणस्यैव" चतुर्वर्गफलदत्वं पुरातनैरुदीर्यते न कदापि "दुष्टकाव्यनिषेवणस्य"।

साम्प्रतं यानि काव्यानि दृष्टिपथमवतरन्ति तानि साधून्यसाधूनि वेति तु पश्चाद्विचारयिष्यामः। पूर्वं तु किं साधुत्वं किं वासाधुत्वमिति विचारणीयमस्ति।

मन्मते तु—

वैदिकधर्मानुवर्तकत्वे सति वेदेतरधर्मविघातकत्वं साधुत्वम्। वेदेतरधर्मानुवर्तकत्वे सति वैदिकधर्मविघातकत्वमसाधुत्वम्।

लक्षितलक्षणेऽमुना प्रकारेण काव्यविषयके साधुत्वे वर्तमानकालिककाव्य-महाकाव्यखण्डकाव्यानां वैदिकधर्मानुवर्तकत्वमस्ति नास्ति वेति मीमांसनीयो विषयः ।

ततः प्राक् किं नाम "वैदिकधर्मानुवर्तकत्व-" मित्यपि विचारणीयमेव । मन्मते तु—" चतुर्भिर्वेदैः प्रतिपादितं प्रोक्तं वा वैदिकम् " धर्मश्च ।

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"

इति दार्शनिकसूत्रलक्षित एवात्र समुपादेयः तत्राभ्युदयस्तु—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥ ४ ॥

इति मम्मटाचार्यप्रणीतकाव्यप्रकाशोदरगतानाप्तप्रणीतपद्याशयपर्यालोचनेन जितेन्द्रियतामूलकएव सर्वैरुररीक्रियते । जितेन्द्रियता च ब्रह्मचर्यपूर्वकं गुरुकुलनिवासेनैव समासादयितुं शक्यते नान्यथा पुरुपायुपशतेनापि । निःश्रेयससिद्धिरपि ब्रह्मचर्य्यधारणपूर्वकधृतिक्षमास्तेयशौचसत्याक्रोधादिसेवनादेव पूर्वोपार्जितपुण्यपुञ्जपरिपाकप्राप्तश्रीमद्योगिकुलसमुद्भवैरेव समासाद्यते न सामान्यैः । तदेव येषां येषां काव्यमहाकाव्यखण्डकाव्यानां वैदिकधर्मानुवर्तकत्वं तान्येव साधूनि तदतिरिक्तान्यसाधूनीति सिद्धमेव ।

वर्तमानकालिक-काव्यमहाकाव्यखण्डकाव्यानां वैदिकधर्मानुवर्तकत्व-मस्ति न वेति साम्प्रतं विचारणीयम् । मन्मते तु—शृङ्गारवैचक्षण्यप्रदेषु तेषु वैदिकधर्मानुवर्तकत्वं कुत इति चेद्ब्रह्मचर्यविरोधिकामोत्पादकत्वात् ।

काव्यं तदेव साध्विति वक्तुं शक्यते यद्वैदिकधर्मानुगं स्यात् । येषु काव्येषु धर्मवैचक्षण्यं मोक्षवैचक्षण्यं वा लेशमात्रमपि न प्राप्येत तेषां साधुत्वमसाधुरेव कश्चिद्वदतु नाम वैदिकधर्मानुकूलकृत्यतत्परास्तु सचेतस्को न चेतसापि तत्साध्विति मन्यते का कथा तत्र विषये पुनर्वागनुमतेः ।

कविशिरोमणिकालिदास-पण्डितराजजगन्नाथयोर्जीवनपर्यालोचनया स्फुटमुपलभ्यते यत्र तत्समये कवीनां वैदिकधर्मानुवर्तकत्वमासीदिति ।

यस्य समयस्यावस्थानं बोद्धुमभिलाषः स्यात्तत्कालसमुत्पन्नकविप्रणीत-ग्रन्थावलोकनं तत्पूर्तये स्यात् । कवेर्भावावबोधाय तु तन्निर्मितकाव्यपर्यालोचनं निरस्तापरप्रमाणं प्रमाणमनुमन्यतएव ।

महाराज्ञो भोजदेवस्य समयादर्वाक्तत्समयस्थितकालिदासादिकविनिर्मित-ग्रन्थाभ्यासेन दशलक्षकस्य धर्मस्य प्रतिदिनमवपातएव समभूदिति सर्वसंमतम् ।

मन्मते तु—विहायादिकाव्यं महाकाव्यं वाल्मीकीयरामायणं नाद्यावधि किमपि काव्यं केनापि कविप्रकाण्डेन केवलधर्मप्रवर्तनधिया सम्पादितम् ।

हंसमुखेन कामविह्वलनलदमयन्त्यात्मकनायिकानायकसंयोगवर्णनपरं श्रीहर्षकाव्यं मेघमुखेन स्त्रीवियोगक्लान्तचेतसो गन्धर्वस्य काल्पनिकं तत्तदुद्दिश्य सन्देशप्रेषणगर्भं कालिदासकाव्यं, केवलनायिकाभेदवर्णनपरं भानुजीदीक्षितकाव्यं, गन्धर्वकुमारीवर्णनपरं बाणभट्टकाव्यं, भामिनीविलासवर्णनपरजगन्नाथकाव्यम् । किं बहुना सर्वमप्याधुनिकं काव्यजातं शृङ्गारचेष्टावर्णनपरमेव ।

तदेवंविधशृङ्गारप्रवर्तककाव्यपरिशीलनेन कथमभ्युदयनिःश्रेयससमुदयः ? कथं च वैदिकधर्मानुवर्तकत्वं जनानामिति सर्वथा विचारणीयमेव ।

छन्दःशास्त्रस्य वेदाङ्गत्वाच्छन्दोमूलकत्वाच्च काव्यानां कथं वैदिकधर्मविधानपरत्वमिति नाद्यावधि केनापि विचारितम् । मन्मते त्वापेपदमनुपगताः कवयो न वैदिकाः किन्तु लौकिका एव । लोकसौन्दर्याकृष्टचेतसां तेषां केवललोकव्यवहारमात्रवर्णनपरत्वात् ।

यदीमे वैदिकविषयाब्धौ कृतावगाहा भवेयुस्तर्हि कथं न जगदीश्वरगुणानुवादपूर्वकं तत्कृतिषु यज्ञसन्ध्यादिवैदिककर्मणां पूर्णतया वर्णनमुपलभ्येत ।

दृश्यते तद्विरुद्धं कामोत्पादकं सन्ध्यावर्णनमेषु विषयखेदसूचकं प्रभातवर्णनं च ।

प्रमाणान्तरमप्येषां वैदिकविषयानभिज्ञताया समुपलभ्यते, यदेतत्कृतग्रन्थेषु केवलं पौराणिकविषयस्यैव समुद्भासनं न वैदिकविषयस्येति ।

किमतःपरमेतेषां पौराणिकत्वे प्रमाणान्तरगवेषणं यदेतत्कृतपुस्तकेषु मङ्गलाचरणमपि पौराणिककथोपयुक्तमेवोपलभ्यते । कुत्रचिद्वक्रतुण्डविषयकं कुत्रचिल्लक्ष्मीविष्णुविषयकं क्वचिद्गौरीशङ्करविषयकं क्वापि शक्तिविषयकम् ।

अहो क्वास्ताः क्व निपतिताः ! किं कर्तव्यमासीत्किं चरीक्रियते त्रिविधदुःखात्यन्तनिवृत्तये लब्धमानुषदेहानामस्माकं पौराणिकमतानुगैः कविभिः कृतेषु ग्रन्थेषु प्रयाति समयः ।

भवबन्धविच्छित्तये न ध्यातमीश्वरपदं सकलकष्टनाशनपटुर्यथेष्टमिष्टदो धर्मो नासादितः नाधिगतं सर्वथाभ्युदयनिःश्रेयसकरं ब्रह्मचर्यं, नाधीतानि वेदादिसत्यशास्त्राणि, नाभ्यस्ताः समस्ततापपुञ्जभञ्जनपरा उपनिषदः, न गुरुकुले पठितं, केवलमसाधुकाव्यावलोकनेनैव जीवनमतिवाहितम् । साध्विदमुच्यते—

जन्मेदं व्यर्थतां नीतं भ्रष्टकाव्यावलोकनैः ।
काचमूल्येन विक्रीतं चिन्तामणिमिदं वपुः ॥ ५ ॥

तदधुना कलिकालमहर्षेः परोपकारव्रतस्य वेदवेदाङ्गविदः जितेन्द्रियस्य कस्यचिज्जीवनमनुगम्यतां यथा पुनरपि मोक्षावाप्तिः स्यात् । न महात्मनामनुगमनमन्तरा कदापि श्रेयः समासादयितुं शक्यते केनचित् ।

मन्मते तु—

न तथोपकृतं जगति केनापि यथा महर्षिप्रवरेण श्रीदयानन्दसरस्वतीस्वामिना कलियुगेप्युपकृतं वास्तवेप्ययं कोपि नवोधर्मोदयनारः यस्योदयेन समस्तेपि भारतवर्षे पुनरुदियाय नष्टोपि वैदिकसमयः ।

वेदवेदाङ्गपारगेण सङ्गोपाङ्गतया समाप्तब्रह्मचर्येण दर्शितसकललोककौतुकेन देवदेवेनामुना तथा जगति कृतं यथा नापरेण केनाप्यधिकृतम् ।

वेदविरोधिनां मर्दनं, वेदानुगामिनां रक्षणं, गुरुकुलमहाविद्यालयकल्पनं, दीनानाथजनकृते निर्वहणोपयोगिकल्पनं, ब्रह्मचर्याश्रमपरिपालनकथनं, बालविवाहविनाशनं, वैधव्यविध्वंसनं, सर्वमप्यस्यैव महर्षेः कृपया पुनरपि भारते नयनयोरगात्पदम् ।

तदेवंविधवैदिकधर्मप्रवर्तकस्यास्य ये ये पूर्णतया जीवनमनुगमिष्यन्ति ते ते पुनरपि सौख्यमनुभविष्यन्त्यतो नात्र विधेयं विलम्बनम् ।

नैवंविधः कोप्यत्र भूवलये महात्मा भविष्यतीति मत्वा मद्गनासरस्वत्यप्यस्यैव जीवनवर्णनपरं महाकाव्यमरचयत्, यत्कतिपयपत्रपरिवर्तनादेव पदमेष्यति दृशोः ।

साम्प्रतं महाकाव्यविषये किञ्चिदुदाह्रियते—महाकाव्यमेतद्विश्वनाथकविराजप्रणीतमहाकाव्यलक्षणानुगमस्ति तद्यथा—

"सर्गबन्धो महाकाव्यमिति"

तदुक्तं प्रथमं लक्षणं एतावताऽध्यायसम्बद्धग्रन्थानां न काव्यत्वमित्यायातम् ।

"तत्रैको नायकः सुरइति"

द्वितीयं लक्षणं सुरशब्दोत्र देवापरपर्यायः देवाश्च "विद्वांसो हि देवाः" इति शतपथप्रमाणाद्विद्वांसएव तदेतत्प्रत्यक्षमेव स च नायको 'धीरोदात्तगुणान्वितः' इत्यपि स्फुटमेव । धीरोदात्तलक्षणं यथा दर्पणे —

अविकत्थन क्षमावानतिम्गभीरो महासत्व ।
स्थेयान्निगूढभावो धीरोदात्तो दृढव्रत कथित ॥

इति स्वधेमपोद धीरोदात्तलक्षणं महाभागे काव्यनायके महर्षौ सर्वांशे सङ्गच्छतएव नात्र विस्मयलवः ।

"सद्वंशः क्षत्रियो वापीति"

पाक्षिक लक्षण न मुख्य [ तत्रैकोनायकः सुरइति ] पूर्व मुख्यलक्षणस्य कृतत्वात् ।

परं सज्जनसिहधर्मादिवर्णनेन तदपि लक्षण न व्याहन्तु शक्यतेऽनस्तद-प्यास्ताम् ।

"शृङ्गारवीरशान्तानामेकोङ्गीरस इष्यते"

इति तृतीयं लक्षण तत्र शास्त्रार्थप्रसगे महासत्वस्यास्य वीरतया वर्णन तदितरस्थले तु क्षमावतोस्य शान्ततयावस्थान युगपदेव वीरशान्तयोरङ्गित्व-मनुमन्यते ।

न यत्र दुःख न सुख न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रस स शान्त कथितो मुनीन्द्रै सर्वेषुभा वेषु शमप्रधान ॥

इति शान्तरसलक्षण लक्षणेत्र शान्तरसानुगामिना न कापि चिन्तेति कथन लौकिकचिन्ताविषयकम् पारमार्थिकी चिन्ता तु न केनापि भूवलये हातु शक्या न कापीच्छेत्यपि कथन लौकिकेच्छा विघातक न परोपकारेच्छा विनिवर्तकं तत्परत्वान्महर्षीणाम् ।

वीरतात्वत्र नायके ब्रह्मचर्यसमुत्था या न कुत्रापि समासादयितु शक्यते नायकान्तरे ।

"इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्"

इति चतुर्थ लक्षणम् । तत्र इतिहासपेतिह्य यदत्र भूवलये प्राप्येत न ततो विरुद्ध न च सृष्टिक्रमविरुद्ध स्यात् । यदीतिहासशब्देन रामाय-णमहाभारतादि गृह्यते तर्हि ततः प्रागितिहासपदेन किमुपादेयं स्यात् । अथ च सृष्टिनियमविरुद्धानामसम्भवादिदोषग्रस्ताना च कथमेषामितिहासपरत्वं कथान-कानाम् । अतः सृष्टिक्रमानुकूलमसम्भवादिदोषरहितं यदैतिह्य स एवेतिहास. स चात्र स्फुटएव । अन्यद्वा सज्जनाश्रयमितिलक्षणान्तरमपि महर्षिवर्णनपरमे-तन्न जहाति स्थलम् ।

"आदौ नमस्क्रियाशीर्वा वस्तुनिर्देशएव वा"

इति पञ्चमं लक्षणम्। तदत्र परमात्मनो नमनमादौ वरीवर्ति। अथ च "ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमितिशिष्टाचारानुरोधात्" मध्येपि मङ्गलार्थकस्याथशब्दस्योत्तरार्द्धारम्भे विन्यसनं दृश्यताम्। ग्रन्थान्तिम-पद्ये च ओमिति परमात्मनो नामधेयं विन्यस्तं यदस्य फलभूतमपि मन्यते माङ्गलिकं च।

"क्वचिन्निन्दाखलादीनां सतां च गुणवर्णनम्"

इति षष्ठं लक्षणम्। तदत्र खलदुष्टविनिन्दनं सज्जनगुणानुवादवर्णनं च स्वाभाविकमेव। "आदि"-शब्देन वेदेतरमतानुयायिनां ग्रहणम्।

"एकवृत्तमयैः पद्यैरवसानेन्यवृत्तकैः"

इति सप्तमं लक्षणम्। पादेन संयोगात्पद्यम्। लक्षणमिदं सर्वांशे चारि-तार्थ्यमुपगतं तत्र तत्र दरीदृश्यतएव। अवसानशब्दोत्र सर्गावसानबोधन-परो न ग्रन्थावसानपरकः।

"नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह"

इत्यष्टमं लक्षणम्। अतिस्वल्पता दशपद्यात्मिका। अतिदीर्घता सहस्र-पद्यात्मिका। तदुभयविरुद्धमेतत्काव्यम्। सर्गा अप्यत्रैकविंशतिः। पद्यानि च वसुवारिधिवह्निनयनमितानि।

"नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते"

इति नवमं लक्षणम्। एतदपि लक्षणं पञ्चमषष्ठसर्गाभ्यां पूर्णतयानुगम्यते। विद्यन्ते तयोर्मध्ये स्वागता-शार्दूलविक्रीडित-मन्दाक्रान्ता-पञ्चचामर-पृथिवी-नर्दटक-शिखरिणी-मालिनी-मधु-माधवी-स्रग्धरा-प्रभृतीन्यनेकवृत्तानि।

"सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्"

इति दशमं लक्षणम्। तदेतत्सर्वत्रापि पूर्णतया समनुसृतमेव।

"सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः"

इत्यादि।

"वर्णनीया यथायोग्यमित्यन्त-"

मेकादशं लक्षणम्। सकलमप्येतत्प्रसङ्गवशात्तत्र तत्र सर्वांशेनाप्यनुगतम्।

"नामास्य सर्गोपादेयकथया सर्गनाम च"

इति द्वादशं लक्षणम्। तदिदमपि प्रतिसर्गं नायकनामनिर्देशपूर्वकं सर्गो-पादेयकथानुकूलसर्गाभिधं च सङ्कल्पितं लक्षणम्।

काव्यानुशासने तु—

" आशीर्नमस्क्रियावस्तुनिर्देशोपक्रमयुत, असंक्षिप्तग्रन्थम्, अविषमबन्ध, अनतिविस्तीर्णपरस्परसम्बद्धसर्गम्, वक्तव्यवस्तुप्रतिज्ञानुगतम्, तत्प्रयोजनोपन्यासगर्भ, सज्जनदुर्जनयो: स्तुतिनिन्दाभ्यामुपेत, दुष्कराचित्राद्येकसर्गाङ्कित स्वाभिप्रेतवस्त्वङ्कितसर्गान्त, चतुर्वर्गफलोपेत, चतुरोदात्तनायक, प्रसिद्धनायकचरितवर्णनपरं महाकाव्यम् "

इति लक्षण विहितम्।

तत्रासंक्षिप्तता तु [ २३४८ ] वसुवेदवह्निनयनमितै: पद्यैरस्य स्वयमेव दृश्यते। अविषमबन्धतापि पूर्णतयानेनालङ्क्रियते । चित्रकाव्यमप्यत्र चतुर्दशे सर्गे विद्यते । शेष प्रागुक्तलक्षणानुरूपमेव नाधिकम्।

एव महाकाव्यलक्षणे निदर्शिते किञ्चिदिदानीं काव्यविषयकमुदाह्रियते । तत्र किं नाम काव्यमिति प्रस्तुते प्रश्ने " वाक्य रसात्मक काव्यमिति " दर्पणकारमतम्। रुद्रटस्तु—

"शब्दार्थौ काव्यमित्येवाह"

वाग्भटस्तु—

"शब्दार्थौ निर्दोषौ सगुणौ प्राय:सालङ्कारौ काव्यमित्याह"

मम्मटस्तु—

"अदोषौ सगुणौ क्वचिदनलङ्कृती शब्दार्थौ काव्यमित्याह"

भोजस्तु—

"रसान्वितमलङ्कारैरलङ्कृतं निर्दोषं गुणवत्कवे:
कर्मकाव्यमित्याह"

तदेतेषु सर्वेष्वपि काव्यलक्षणेषु सर्वगुणयुक्त कण्ठाभरणकारस्यैव लक्षणम्। तदितरेषु आंशिकन्यूनता दर्शनात् रसशब्दोत्र "रसो वै स: रस ह्येवायं लब्ध्वा आनन्दी भवतीति " छान्दोग्यदर्शनात् परमानन्दबोधक:। परमानन्दश्च मोक्षप्राप्तिमूलक: । मोक्षोपि निष्कामवैदिकधर्मपालनमूलएव । तदेवपरमानन्दबोधकरसवत्काव्यमेव सज्जननिरीक्षणयोग्य न विषयानन्ददायकम्।

"द्विविधं खलु काव्यं भवति"

गद्यात्मक पद्यात्मक च तत्र गद्यात्मक त्रिविधम् पद्यात्मकमनेकभेदम्। उभयमपि श्लेषवक्रोक्तिसम्भावनासंकरसन्देहरूपकोपमापन्हुतियमकानुप्रासचित्रोल्लेखप्रभृतिभिरलङ्कारैरुपयोक्तुं शक्यते ।

संस्कृतप्राकृतपैशाचीमागधीशौरसेनीप्रभृतयो जातिभेदाः। द्रुताविलम्बिता-मध्या-द्रुतविलम्बिता-द्रुतमध्या-मध्यविलम्बिताद्या गतिभेदाः। वैदर्भीपाञ्चाली-गौडीयावंतिकालाटीयामागधीतिरीतयः। श्रुतिवृत्तिवर्णपदद्विवचनलाटाद्या अनुप्रासाः। कवर्गानुप्रासवती कार्णाटी, चवर्गानुप्रासवती कौन्तली, टवर्गानुप्रासवती कौङ्की, तवर्गानुप्रासवती कौङ्कणी, पवर्गानुप्रासवती वानवासिका, द्वित्रिवर्गानुप्रासवती मात्सीति सर्वा अनुप्रासजातयः।

ग्रन्थेत्र यथास्थानं सर्वेपीमे जातिगतिरीतिभेदा अनुप्रासजातिभेदाश्च यथायथं विन्यस्ताः। शब्दस्तोममहानिधि-बृहदभिधान-हलायुध-विश्वमेदिनी-त्रिकाण्डशेष-हारावली-प्रभृतिकोषप्रयुक्ता विलक्षणाश्च शब्दा अप्यत्र यथास्थानं स्थापिताः।

एवं समस्तलक्षणलक्षितेऽत्र महाकाव्ये यदि स्वाभाविकजीवस्मृतिभ्रंशवशेन क्वचिदनुपयुक्तता स्यात्सापि—

"धावतः पतनं न दोषाय भवतीति"

भाष्यनियमेन "न हि सर्वः सर्वं जानातीति" लोकोक्तिवशेन च सदयहृदयैर्न चेतसि स्थापनीयेति निवेदयते।

कार्तिकशुक्ला पूर्णिमा
वि० १९६७

विदुषामणुश्चरणरेणुः,
अखिलानन्दशर्म्मा



# भूमिका का भावानुवाद

माननीय महोदयगण !

यह अनावश्यक प्रतीत होना है जो कि अनेक वार साहित्य-समुद्र के भीतर प्रविष्ट हुए आप लोगों के समक्ष काव्य के प्रयोजनों का कथन करना। क्योंकि :—

"काव्यं यशसेऽर्थकृते०"

इस मम्मटाचार्य प्रणीत काव्यप्रकाश की कारिका ने ही पूर्णतया उसके प्रयोजनो के कथन करने में चरितार्थता प्राप्त की है।

"धर्मार्थकाममोक्षेषु०"

इस कारिका का कथन करते हुए साहित्यदर्पणकार ने भी न केवल काव्य को कीर्ति एवं प्रीतिजनक ही माना किन्तु अनेक कलाओ के भीतर चतुरता देनेवाला धर्म, अर्थ, काम, मोक्ष का देनेवाला भी अच्छे काव्यो का देखना ही बतलाया है जो कि उनकी—

"चतुर्वर्गफलप्राप्तिः०"

इस कारिका से पूर्णतया प्रतीत होता है।

अब हमको यह विचार करना चाहिए कि काव्यो के अन्दर अच्छापन क्या है और बुरापन क्या है ? क्योंकि अच्छे काव्यो का देखना ही चतुर्वर्ग-फलद माना गया है न कि बुरे काव्यो का।

आज कल जो मेघदूत, ऋतुशृंगार आदि काव्य दृष्टिगोचर होते हैं वे अच्छे काव्यो में मानने योग्य हैं या बुरे काव्यो में, इसका निर्णय तो हम पीछे करेंगे; पहले अच्छेपन और बुरेपन का विचार करना अत्यावश्यक है, इसलिए इसी विषय पर विचार करते हैं।

हमारे सिद्धान्त में तो "वैदिक धर्म के अनुगामी होने पर वेद-विरुद्ध धर्म का विध्वंसक होना उनका अच्छापन है" और "वेद-विरुद्ध धर्म के अनुगामी होने पर वैदिक धर्म का विघातक होना उनका बुरापन है"।

वर्तमान समय के काव्य, महाकाव्य, खण्डकाव्य वैदिक धर्म के अनुगामी हैं या नहीं हैं, यह विषय अब विचारने योग्य है। इससे पूर्व 'उनका वैदिक धर्म का अनुगामी होना' क्या है यह भी विचारने योग्य ही है।

मेरे सिद्धान्त में तो "चारों वेदों द्वारा प्रतिपादित या कहा हुआ वैदिक और उससे विपरीत अवैदिक माना जाता है"। धर्म भी "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इस सूत्र के द्वारा जैसा बतलाया गया है वैसाही मानने योग्य है।

आलङ्कारिकशिरोमणि मम्मटाचार्य "जितेन्द्रियत्वं विनयस्य कारणं" इस पद्य का उल्लेख करते हुए बतलाते हैं कि जितेन्द्रियताही अभ्युदय का एक मुख्य कारण है। वह बिना गुरुकुल जाने के बन नहीं सकती। निःश्रेयस भी दश लक्षणयुक्त धर्म के सेवन से ही प्राप्त हो सकता है, उसके बिना कदापि नहीं। इसलिए जो जो काव्य, महाकाव्य, खंडकाव्य वैदिक धर्म के अनुगामी हों वही अच्छे और उनसे अतिरिक्त सब बुरे हैं।

वर्तमान समय के काव्य, महाकाव्य, खडकाव्य वैदिक धर्म के अनुगामी या उसके प्रतिपादक सर्वांश में नहीं हैं क्योंकि उनमें उसके विरुद्ध शृङ्गारचेष्टाप्रवर्तक, कामोत्पादक स्त्रियों का सर्वांग वर्णन, उनका विरहवर्णन, जलक्रीडा, वनविहार, मद्यपान, सुरतरहस्य आदि घृणित बातों का ही अधिकतर उल्लेख है। इसीलिए आदित्यब्रह्मचारी महर्षि दयानन्द इन काव्यों का देखना भी बुरा बतलाते हैं, पढ़ने की तो बात ही क्या है।

काव्य वही अच्छा कहा जा सकता है जो वैदिक धर्म का अनुगामी हो। जिन काव्यों में धर्म सिखाने वाली या मोक्षमार्ग की बतलानेवाली बातों का लेश मात्र भी उल्लेख न किया गया हो उनको कोई मन्दमतिही अच्छा बतलाता हो, बुद्धिमान् कोई भी नहीं बतला सकेगा।

कविशिरोमणि कालिदास और पण्डितराज जगन्नाथ आदि महाशयों के जीवन पर विचार करने से यह बात स्पष्ट रीति से प्रतीत होती है कि उस समय में कवि वैदिक धर्म के माननेवाले न थे किन्तु पौराणिकधर्म के माननेवाले थे।

जिस समय का व्यवहार देखना हो, उस समय के कवियों की कल्पना देखनी चाहिए और कवि का भाव देखना हो तो उसका बनाया हुआ काव्य देखना चाहिए।

महाराजा भोज के समय से इधर कालिदास आदि कवियों के बनाये हुए ग्रन्थों के अभ्यास से दश लक्षण-लक्षित-धर्म गिरता ही चला गया। मेरी अनुमति में तो सिवा आदिकवि महात्मा वाल्मीकि की कल्पना के किसी कवि ने भी आज तक कोई काव्य मनुष्यों को धर्ममार्ग में चलाने के लिए नहीं बनाया।

हंस के द्वारा कामवेदना से खिन्न नल और दमयन्ती का संयोग बतलानेवाला, दमयन्ती के प्रत्येक अङ्ग का वर्णनपरक "श्रीहर्षचरित", पद पद में ब्रह्मचर्य्य का नाश करनेवाला "मेघदूत", केवल नायिका भेदों को बतलानेवाली "रसमञ्जरी", एक गणिका के साथ व्यभिचार बतलानेवाला, "राक्षसकाव्य" असमय में वीर्य्यपात करानेवाला "श्रुतबोध", कहाँ तक कहें आधुनिक समस्त काव्य इसी प्रकार की गन्दी बातों से भरे हुए हैं। विशेष विस्तार मत्प्रणीत "महाकविचरित" में देखिए जोकि इसी लिए बनाया गया है।

इस प्रकार के काव्यों के देखने से कहाँ तक अभ्युदय और निःश्रेयस की प्राप्ति हो सकती है और कहाँ तक मनुष्य वैदिक धर्म के अनुगामी बन सकते हैं, यह बात पद पद में विचारने योग्य है।

पिङ्गलाचार्य्य प्रणीत छन्दःशास्त्र वेद का प्रथम अङ्ग माना गया है और उसी के आधार पर, काव्यों की भी रचना की जाती है, फिर वेदाङ्ग-मूलक-काव्य वेद के विरोधी बनते हुए क्यों सन्निपात परिभाषा को सफल करते हैं। यह विचार आज तक किसी भी विद्वान् ने नहीं किया। मेरी अनुमति में तो जितने ये कवि हुए सबके सब पौराणिक मार्ग पर चलनेवाले हुए। वैदिक मार्ग पर चलनेवाला कोई नहीं हुआ। यदि ये कवि वैदिक धर्म के अनुगामी होते तो कुछ तो वैदिक सिद्धान्तों का अपने ग्रन्थों में वर्णन करते। और भी लीजिए, जितने विषय इनके काव्यों में मिलते हैं वह सब पुराणों के ही मिलते हैं, वेदों का या शास्त्रों का कोई भी नहीं। कहाँ तक कहें इनके ग्रन्थों के जो मङ्गलाचरण हैं वह भी गन्दी बातों से नहीं बचे हैं। किसी ग्रन्थ का मङ्गलाचरण विष्णुभगवान और लक्ष्मी का सम्भोग बतला रहा है जैसे—"उत्तिष्ठन्त्यारतान्ते' किसी का राधा और कृष्ण का जैसे—"मेघैर्मेदुरमम्बरं" किसी का शिव एवं पार्वती का जैसे—"आत्मीयञ्चरणं दधाति पुरतः"। कालिदास के ग्रन्थों का तो कहना ही क्या है। देखिए, आपके बनाये हुए एक ग्रन्थ का मङ्गलाचरण है "लम्बोदरस्य मदनध्वजमेकमीडे"।

हा! कहाँ बैठे हुए थे, कहाँ आ कर गिरे, क्या करना था, क्या करने लगे! तीन प्रकार के दुःख दूर करने के लिए यह दुर्लभ समय मिला है। जोकि इस प्रकार के गन्दे ग्रन्थों के देखने में जा रहा है (हा कष्टम्!)। न

ईश्वर के गुणों का स्मरण किया, न धर्म कमाया, न ब्रह्मचर्य्य साधा, न वेदादि सत्य शास्त्र देखे, न उपनिषद् पढ़े, इन दुष्ट कार्य्यों में ही समय खराब हुआ। इसलिए अब चलिए, किसी धार्मिक पुरुष के जीवन का अवलम्ब लें, जो वैदिक धर्म के प्रचारक, परोपकारी, ब्रह्मचारी, निर्लोभ, धर्म के समस्त लक्षणों पर चलनेवाले हो। मेरी अनुमति में तो इस कराल कलिकाल में वेदों की रक्षा करनेवाले, आनन्दकन्द जगदानन्द ऋषि दयानन्द से भिन्न और ऐसा कोई प्रतीत नहीं होता, जो अनुकरणीय हो।

इस समय में आपही ऐसे उत्पन्न हुए जोकि गये हुए वैदिक समय को फिर दुबारा स्थापित कर गये। संसार के उपकारार्थ, अपना मोक्षानन्द छोड़ विष तक खा लिया। अपने शरीररूपी बन्धन में पडकर संसार को मुक्तबन्धन कर दिया। गुरुकुल, अनाथालय, स्त्री-शिक्षा, विधवोद्धार आदि अनेक सत्-कार्य्य प्रस्तुत किये, इसलिए आपके जीवन का ही अनुकरण कीजिए। जिस-से फिर भी आनन्द प्राप्त हो, कष्ट न होवे, धर्म, अर्थ, काम, मोक्ष हस्तगत हो।

अब कुछ महाकाव्य के विषय में विचार करना चाहिए। महाकाव्य उसे कहते हैं जो साहित्यदर्पण में लिखे हुए महाकाव्य के लक्षणों से सम्बन्ध रखता हो। उनमें पहला लक्षण (सर्गबन्ध है)। इसीलिए अध्यायों से सम्बन्ध रखने-वाले ग्रन्थ महाकाव्य नहीं कहला सकते।

दूसरा लक्षण यह है कि ( उसके भीतर वर्णनीय नायक देव हो ) वैदिक सिद्धान्त में देव शब्द का अर्थ विद्वान् माना जाता है, जैसा शतपथ में लिखा है कि—"विद्वा౨सो हि देवाः" वह यहां पर स्वतः सिद्ध है।

तीसरा लक्षण इस प्रकार है कि ( शृङ्गार, वीर और शान्त ) इन तीन रसों में कोई रस अङ्गी होना चाहिए। इस महाकाव्य में जहाँ जहां पर शास्त्रार्थ का समय उपस्थित हुआ है वहाँ वहाँ पर वीर और तदितर स्थल में शान्त दोनों ही रस अङ्गी बने हुए हैं।

चौथा लक्षण कहता है कि महाकाव्य में "या तो कोई ऐतिहासिक वृत्त हो या किसी सज्जन का वर्णन हो, " यहाँ पर महर्षि का वर्णन है साथ ही सृष्टिक्रमानुकूल और भी वर्णन स्थल स्थल में किया गया है।

पांचवाँ लक्षण इस बात को जतला रहा है कि महाकाव्य के "आरम्भ में या तो नमस्कार या आशीर्वाद या किसी वस्तु का निर्देश" होना चाहिए। यहाँ पर ग्रन्थ के आरम्भ में परमात्मा के लिए नमस्कार किया गया है। मध्य में मङ्गलार्थक अथ शब्द का प्रयोग किया गया है। अन्त में ईश्वर का मुख्य नाम "ओ३म्" रक्खा है जोकि इसके पठन का फलस्वरूप है।

छठा लक्षण कहता है कि महाकाव्य में " कहीं कहीं दुष्टो की निन्दा और कहीं कहीं पर सज्जनो का गुण-कीर्तन भी " होना चाहिए, जोकि यहाँ पर स्वतः सिद्ध है।

सातवाँ लक्षण इस बात को सूचित करता है कि " महाकाव्य के प्रत्येक सर्ग मे एक ही छन्द होना चाहिए और सर्ग के अन्त मे छन्द बदलना चाहिए " जैसा कि यहाँ पर सर्ग सर्ग मे किया गया है।

आठवाँ लक्षण बतलाता है कि महाकाव्य मे " न बहुत छोटे न बहुत बडे ८ से अधिक सर्ग होने चाहिए " यहाँ पर इकीस हैं।

नवाँ लक्षण कहता है कि महाकाव्य में " कोई सर्ग ऐसा भी होना चाहिए जिस में अनेक छन्द हों " जैसा कि यहाँ पर पाँचवाँ और छटा सर्ग है।

दशम लक्षण का यह अभिप्राय है कि " महाकाव्य के सर्गों के अत में अगले सर्ग की कथा की गुप्त रूप से सूचना होनी चाहिए " जैसा कि यहाँ पर किया गया है।

ग्यारहवाँ लक्षण कहता है कि महाकाव्य में " सध्या-समय, सूर्यास्त, चन्द्रोदय आदि का ' वर्णन भी होना चाहिए जो कि प्रसङ्गवश तत्र तत्र किया गया है।

बारहवाँ लक्षण इस बात को निर्दिष्ट करता है कि महाकाव्य में प्रति सर्ग " काव्य-नायक का निर्देश और सर्ग मे वर्णन किये हुए विषय के नाम से सर्ग का नाम होना चाहिए " जो कि इस के प्रति सर्ग में किया गया है। इस प्रकार साहित्यदर्पण में जो महाकाव्य का लक्षण किया गया है वह इस में पूर्ण रूप से पाया जाता है।

काव्यानुशासन में जो महाकाव्य का लक्षण किया गया है उस में इतना अधिक है कि महाकाव्य संक्षिप्त नहीं होना चाहिए, चित्र काव्य से अलंकृत और सरल होना चाहिए। यह भी बात इस महाकाव्य से पृथक् नहीं रही। [ २३४८ ] पद्यो से तो इसकी सक्षिप्तता दूर हो गई। ८ चित्र जो कि ग्रन्थ के अत में लगा दिये गये हैं उनसे सचित्र भी यह हो ही गया। रही सरलता वह इसका स्वाभाविक गुण है।

जिस प्रकार ईश्वरीय पदार्थ सबके कल्याणार्थ प्रस्तुत होते हैं, जिस प्रकार सूर्य का प्रकाश विना पक्षपात के सबके लिए होता है, जिस प्रकार मेघो की वृष्टि, नदियो का जल, वृक्षो की छाया, उदारो का धन, सबके लिए हुआ करता है, जिस प्रकार ऋषि दयानन्द का जगत् में आना सबके

उपकारार्थ हुआ, इसी प्रकार यह महाकाव्य भी सबका उपकारी बने, यह विचार कर इस में-सरलता का अधिक ध्यान दिया गया है।

महाकाव्य का लक्षण तो इस प्रकार समाप्त हुआ अब कुछ काव्य के विषय में कहते हैं। विश्वनाथ, विश्वेश्वर, मम्मट, रुद्रट, वाग्भट, जगन्नाथ, भोज आदि अनेक विद्वानो ने अपने अपने ग्रन्थों में भिन्न भिन्न काव्य का लक्षण किया है उन मे "सरस्वतीकण्ठाभरण" में कहा हुआ लक्षण सर्वोत्तम है जो इस प्रकार है :—

"रस से युक्त, अलङ्कारों से अलङ्कृत, दोषरहित, गुणयुक्त, कवि का जो कर्म हो वह काव्य कहलाता है"। रस शब्द से यहाँ पर ब्रह्मानन्द का ग्रहण किया गया है न कि विषयानन्द का। आज कल के मन्दमतियो ने विषयानन्द को रस मान कर भारत का जो सत्यानाश किया है वह किसी से छिपा नहीं है।

छान्दोग्य उपनिषद् में (रसो वै सः रस ह्येवायं लब्ध्वा आनन्दी भवति) इस प्रकार रस का वर्णन आया है, इसी लिए (ब्रह्मास्वादसहोदरः) दर्पण में लिखा है। सहोदर शब्द का अर्थ यहाँ पर समान है।

अलङ्कार शब्द से यहाँ पर उपमा, रूपक, साम्य आदि का ग्रहण किया गया है। दोष शब्द से असम्भव आदि का ग्रहण किया गया है। गुण-प्रसाद, ओज, कान्ति, माधुर्य, औदार्य, सौकुमार्य आदि होते हैं। इन सबका जिस में समावेश हो वह काव्य कहाता है। काव्य का बनाने वाला "कवि" और महाकाव्य का बनाने वाला "महाकवि" कहा जाता है।

इस महाकाव्य मे समस्त जातिभेद, समस्त गतिभेद, समस्त रीतियाँ समस्त अनुप्रास, स्थल स्थल मे बतलाये गये है, और साथ ही "शब्दस्तोम-महानिधि, बृहदभिधान" आदि अनेक कोषो के विलक्षण विलक्षण शब्द भी दिये गये है। इस प्रकार इस सर्वांग सुन्दर महाकाव्य मे यदि जीव के स्वाभाविक "अल्पज्ञता" दोष से कहीं पर कुछ क्षति हुई हो तो सहृदय पाठक क्षमा करें।

विद्वानों का चरणसेवक,
अखिलानन्दशर्म्मा

ओ३म्

# ग्रन्थकारपरिचयः

अस्ति जलधिरशनापरिवेष्टितायामनेकसुरनरमुनिमहर्षिप्रशस्ताया सप्तकुलाचलकुलधारिण्या सप्तद्वीपाया जगत्या सर्वलोकमान्य भरतप्रतिष्ठितपराक्रमं किमपि स्थलम् ।

यत्र रामचन्द्रनलयुधिष्ठिरप्रभृतयो भूपाः, पतञ्जलिव्यासकणादगौतमवसिष्ठभरद्वाजप्रभृतयो महर्षयः, सनकसनन्दनसनातनसनत्कुमारप्रभृतयो ब्रह्मवेत्तारः, श्रीहर्षभारविमयूरबाणभवभूतिकालिदासप्रभृतयः कवीन्द्राः, समये समये समुद्भूतिमगमन् ।

तत्रोभयतो विन्ध्यहिमालयाभ्यां नियमितं गङ्गायमुनासरस्वतीप्रभृतिस्रोतोवहाभिरलङ्कृतं, नानामुनिजनपवित्रितवनभूभागं, यज्ञसमुत्थितधूमधूपितसर्वलोकजनं, महाभारतरामायणवर्णितानेकविधवस्तुसारं, सारमिव भुवोवलयस्य हृदयमिव धरित्र्याः पावनं जनानां वरीवर्ति ब्रह्मावर्तगर्भमार्यावर्तावस्थानम् ।

यस्य नातिदूरं कुरुक्षेत्रमत्स्यपञ्चालशूरसेनप्रभृतिराजवर्याधिष्ठानपरिमण्डितं सर्वदा सर्वसम्पत्तिमद्ब्रह्मर्षिदेशावस्थानम् । तत्र मत्स्यदेशान्तर्गतभूमण्डलमण्डनायमानभवनं गोपगोपितगोकुलं सर्वतो वेदवेदाङ्गपारगैर्द्विजगणैरुपेतं विद्यते वदार्यू प्रान्तम् ।

तस्यैकदेशे भुवो भूषणमिव भगीरथपथानुगामिन्या भागीरथ्या नितरामादरातिशयादङ्के विन्यस्तं मुनिजनोपयोगि कुशपलाशशोभितवनैकदेशम्, निसर्गसरलमानवगोपितरथाङ्गियानचयं द्विजराजविजयपताकासूचितसनाढ्यवंशं तच्चन्द्रनगरम् ।

यत्र साङ्गोपाङ्गवेदवेत्तारः प्रतिदिनमनुष्ठितयज्ञाः परित्यक्तसकललोकसुखाः प्रत्यहमहिंसाप्रभृतिधर्मलक्षणप्रवर्तनपराः पदे पदे करुणारुणमानसपरिवर्धित-नानाविधजीवननिनयाः पितामहसमाहूत-प्रतिष्ठितसनाढ्यवंशाः प्रादुरासन्नाह्मर्षयः ।

तत्र लोके पृणाधिकगुणः, स्वभुजोपार्जितसकलसौख्यनिचयः पालयिता धर्माना, पोषयिता नियमाना, रचयिता सद्ग्रन्थानामभूज्जवाहरनामा पण्डितशिरोमणिः। स च ब्रह्मचर्यादनन्तरं वेदविधिना कृतदारकृत्यः समये स्वानुरूपं भगीरथं पुत्रमापत्।

समये समये लब्धवेददीक्षो भगीरथोऽपि द्वितीयाश्रममधिगत्य चतुरो धर्मार्थकाममोक्षानिव चतुरानात्मजानजनयत्। तेषामध्ये निखिलजनप्रार्थनीयश्रमो मोक्षइव निरस्कृतान्यसमस्तसुखः पालितवेदनियमः कलिकालेऽपि दर्शितकृतयुगसमस्तवृत्तः समभूत्सनाढ्यवंशरत्नं मुनिवरष्टीकारामशर्मा।

स च वैदिकेन विधिना समये कृतदारकृत्यः कालेन तनयं प्रपेदे। आनन्दपूर्णचेतसा तेन समयानुकूलमकारि तन्नामकरणमखिलानन्दशर्मेति।

कृतनामकरणोऽखिलानन्दशर्मा अप्युपलक्षितमासावधि सुबुद्धे र्मातुरपि वत्पयोधरप्रस्नुतं पयः। अष्टमे मासि संस्कारपरिमार्जनधिया कुसंस्कारेभ्यो दूरमास्थापयितुमेनं पिता गोक्षीरेण परिवर्धयन्निर्जने गङ्गायास्तटे कालमत्यवाहयत्।

एकाब्दमतीत्य द्वितीयेऽब्दे दत्तपादोऽखिलानन्दशर्म्मा, पित्रा सत्वरं वाराणसीं प्रापितः शिवकुमारशास्त्रिगृहमलञ्चकार। ततश्च तृतीयेऽब्दे दत्तपादो महर्षेर्दयानन्दस्य चरणरजःपरागैः स्वात्मानं पवित्रयाञ्चक्रे।

उपहारमनीषया महर्षये दयानन्दाय दत्तोयं "जयजीवेतिवचोभिरभिनन्दित." कतिचित्क्षणानि महर्षिदयानन्दक्रोडसुखमन्वभवत्। एवं क्रमेण तृतीयाब्दान्ते मुम्बापुरीमधिगत्य गट्टूलालशर्मणा गृहमलञ्चक्रे।

तत्र च पञ्चविंशतिदिनात्मकं समयमतिवाह्य "त्रिवार्षिकः पण्डित" इति गट्टूलालशर्मणा कृतसम्बोधन. प्रत्यावृत्तिदत्तचेतसा जनकेन पुनरपि स्वदेशमासाद्य मात्रे समर्पितोभूत्। मात्रापि देववाणीव्रतया मातृभाषैवास्य देववाणी भवत्विति विचार्य दैवीं वाचमनुगच्छन्त्या परिवर्धितोभूत्।

एवमतीयाय शैशवं निवृत्तिमुपायया तेनैव सह बालचापलं, शिथिलतामाप बुद्धिर्दोषस्य विकासमियायमतिकलिका पित्राप्ययं चतुर्थेऽब्दे कृतपदः सिकतिले भभागे वर्णमात्रादिपरिचयैरनायि पठनोन्मुखताम्। अनन्तरं—

"ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे"

इति मनुस्मरणादस्योपनयनमभूत्। वैदिकेन विधिना वेदारम्भं विधाय गङ्गोपकण्ठगते महर्षिदयानन्दचरणस्पर्शपवित्रितभूमितले कर्णवासप्रतिष्ठितगामणीयके निजे जीवारामशर्मणा गुरुकुले विद्याध्ययनाय निवेशितोभूत्।

एवं धृताषाढः, परिधृतमेखलः, श्रीमानय प्रत्यहं भिक्षार्थे समीपस्थितजनावासाञ्जगाम । तेनैवान्नेन स्वात्मानमपोषयत् । एवमुभयतः कृतसान्ध्यविधिरयं समिद्धेऽग्नौ हवनमप्यहरहश्चक्रे ।

"पुरा कल्प एतदासीत्संस्कारोत्तरकालम्"

"ब्राह्मणा व्याकरणं स्माधीयत इति"

पातञ्जल नियममनुसृत्य यज्ञोपवीतादनन्तरं धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनमपाठ्यनेन । एवं पदवाक्यसंयोगविश्लेषतदर्थपरिज्ञानेनानेन यजुर्वेदो ऋग्वेदश्च सहस्तस्वरमपाठि ।

एवमतीयाय कश्चित्समयः । गर्भैकादशेऽब्दे ब्रह्मदः पितास्य स्वर्जगाम । परं जन्मदः पिता सहैवासाञ्चक्रे । क्रमेण तदनन्तरं विद्याध्ययनाय कविरत्नं मथुरा प्रपेदे । तत्र च श्री १०८ युगलकिशोरशास्त्रिभ्यः साङ्गोपाङ्गं पातञ्जलं व्याकरणमहाभाष्यमध्यगीष्ट ।

गते बहुतिथे काले पितैनं साहित्यसिन्धोरवगाहने क्षमं वीक्ष्य तत्पठनाय नियोजयाञ्चकार । पूर्वपुण्यपरिपाकपरभागमुपेयुषामुना, साहित्याब्धौ कृतावगाहाः, काव्यमहाकाव्यनाटकाख्यायिकाप्रणेतारः कृतपरिचयाः समस्तलोकशास्त्रविचारेषु निर्ममा निरहङ्काराः प्रसादाधरीकृतसमस्तशेमुषीपुञ्जाः किं नासादिताः सुगृहीतनामधेयाः श्री १०८ विष्णुदत्तपादाः ।

मन्ये सकलमपीदं, अघटनघटनापटीयसा परमेश्वरेण पठनोपकरणमेकत्राकारि । सत्यमिदमुच्यते—

द्वीपान्तराज्जलनिधेरुदराद्दिगन्तादाकाशतस्तदुदरस्थितलोकनश्च ।
आनीय दर्शयति सत्वरमिष्टजात भाग्योदयादभिमुखो जगतामधीश ॥

इति । क्वान्यथा तादृशौ पितरौ, तदनूपनगरम्, स समयः, सावस्था, स चाध्यापयिता, ते सखायः, सा मनोवृत्तिः, तत्पुस्तकसौलभ्यम्, तथाविधं च पाटवम् ।

आसाद्य सर्वमपीदं कविरत्न साहित्ये पदमधात् । सर्वतः प्रागनेन पिङ्गलाचार्यप्रणीत छन्दःसूत्रमपाठि श्रीविष्णुदत्तशर्म्मभ्यः । तदुत्तर छन्दःपीयूष-छन्दोमणिमाला-छन्दोमुक्तावली-छन्दोमञ्जरी-प्रभृतीनि द्वाविंशतिः २२ पुस्तकानि केवलमस्मिन्नेव विषये पठितान्यासन् ।

समयेऽस्मिन्नेव रचनानैपुण्यमप्यनेनाधिगतम् । पूर्वजन्मागतशक्तिप्रागल्भ्यम्, लोकशास्त्रयोर्नैपुण्य, काव्यज्ञशिक्षयाभ्यासश्चेति तत्कारणानामुपलम्भात् ।

अनन्तरं यास्काचार्यप्रणीतं काव्यालङ्कारसूत्रं काव्यप्रकाश-काव्यप्रदीप-साहित्यदर्पण-साहित्यकौमुदी-रुद्रटालङ्कार-काव्यानुशासन-रसगङ्गाधरालङ्कार-कौस्तुभालङ्कार-कुलप्रदीप-प्रभृतयोऽन्येऽलङ्कारग्रन्थाश्च श्रीविष्णुदत्तपादेभ्य एव पठिताः ।

नैषधीयचरित-किरातार्जुनीय-शिशुपालवध-हरविजय-राघवपाण्डवीय-प्रभृतयो महाकाव्यनिबन्धा अप्यनेनाधीताः ।

कादम्बरी-वासवदत्ता-दशकुमारचरित-प्रभृतीनि गद्यकाव्यानि, मालती-माधव–मुद्राराक्षस–मृच्छकटिक–शाकुन्तल–वेणीसंहार–नर्मरावदोत्तरराम–चरितप्रभृतीनि नाटकानि, भारतचम्पू-नलचम्पू-रामायणचम्पू-प्रभृतयश्चम्पू-ग्रन्थाः कालिदासप्रहसनलटकमेलकप्रहसन-हास्यार्णवप्रहसनादीनि प्रहस-नानि, कर्पूरमञ्जरीप्रभृतयः सट्टकग्रन्थाः, मुकुन्दानन्दप्रभृतयो भाणग्रन्थाश्च सर्वेप्यनेन गुरुमुखादेवाधीताः ।

किं बहुना सर्वमपि साहित्यजातमनेनाचिरतं जगदीश्वरकरुणया तथा-गुरुभ्योऽधिगतं यथा नान्येन ।

एवं साहित्यसुधासमुद्रे सर्वांशे कृतमज्जनः कविरयं परीक्षासु पदमधात् । सर्वतः प्राक् पञ्चनदविश्वविद्यालयनियमिता विशारदपरीक्षा प्रदाय वैशार-द्यमनेनाधिगतम् ।

सकलशास्त्रसिद्धान्तावबद्धचेतसा पुनरनेन पञ्चनदविश्वविद्यालयनियमितां शास्त्रीतिनाम्नीं सर्वोच्चपरीक्षां प्रदाय शास्त्रित्वमधिगतम् ।

अनन्तरं वङ्गविश्वविद्यालयनियमिता सर्वोत्तमां कविरत्नपरीक्षां प्रदाय सामान्यजनैर्दुरवापं कविरत्नपदमनेनालम्भि । प्रकारेणामुना सकलोच्चपद-मधिगतमेनं कविरत्नं वीक्ष्य, जातीयपरिषदः प्रधानेनास्मै साहित्यरत्नाकर-पदमदायि ।

एवमनेकपदजातालङ्कृतमेनं कविरत्नमवलोक्य नितान्ततुष्टः पिता पुत्र-भारात्कृतकृत्यो बभूव । किमत्र कर्तव्यमतः परमिति मत्वा द्वाविंशतिवार्षिक-मेनं साम्ब सानुजं च भूवलये विहाय लोकान्तरभ्रमणमनीषया दिवमारुरोह ।

दिवङ्गते पितरि नानाचिन्ताभिरभितो वृत्तः कविरयं स्वीयं मनः कथं कथमपि सान्त्वयन्निव कथममुना निर्वाहो भविष्यतीति मुहुर्मुहुर्विचारयन्न-नेकशङ्कासमाधानपरं पद्यमेकमरचयत् । तद्यथा—

यातें बालजनोचिते सुसमये जाते गुणस्योदये ।
छाते दिक्षु यशोविशेषपटले ताते गते चाव्ययम् ॥

शाते शास्त्रपरिश्रमेपि नितरां मातेव मन्येधुना ।
सा ते रक्षणमाचरिष्यति परं का ते त्वरा भारती ॥

इति सम्पाद्य चेदं पद्य पितृवियोगदूनमनः कथमपि शान्तिसाहाय्येन निश्चलं विधाय प्रसङ्गागतेषु कार्यान्तरेषु प्रसक्तो बभूव । सम्पाद्य सर्वमावश्यकं मातुराज्ञया पुनरप्यवशिष्टं ब्रह्मचर्यं समापयितुं भागीरथ्यास्तटे निवासमकल्पयत् ।

निवसतोस्य हृदि समुदपद्यन्त विविधतरङ्गाः साहित्यशास्त्रपरिशीलनफलमपि प्रादुरासीत् । वर्तमानसमये विद्यमानेन काव्यनाटकजातेन न भाविनी कल्याणकला समुदेष्यतीति विचारोपि चेतस्युदपद्यत । किं बहुना महर्षेर्दयानन्दस्य यशोविलसितं कथमत्र विस्तारमेष्यतीति चिन्ता सर्वदास्य हृदये निवासमकरोत् ।

एवमतीयाय कश्चित्समयः पाठनमिषेण समभ्यस्ता विद्यापि शितशस्त्रोपमा समभवत् । जगाम चावसिति पञ्चविंशतिवार्षिक ब्रह्मचर्यम् ।

समाप्तब्रह्मचर्योयं मात्रा विवाहाय प्रेरितोभूत् । मातुराज्ञां शिरसि धारयतानेन षड्विंशतितमे वर्षे गार्हस्थ्ये पदमदायि । गङ्गोपकण्ठगतानूपनगरस्थेन श्रीपण्डितगङ्गाप्रसादशर्मणा पूर्वतः पाठितया स्वसुतया समं करपीडनमस्यानुमतम् ।

एवमुभयतः समुत्पद्यमाने विवाहचिन्तने "मालती" देव्या समं समभवद्विवाहः । विवाहानन्तरं सहस्रार्जुनपुरे पाठनायासौ सामाजिकैः प्रार्थितोभूत् । वर्षद्वयमितमेवं समयं पाठनेनायमनयत् ।

गतवत्येवं कस्मिंश्चित्समये हरदोईप्रान्तप्रतिष्ठितथमरवांपत्तनाधिपतिना श्री१०८ केदारनाथवर्मणा स्वतनयपाठनायायं बहुशः प्रार्थितोभूत् । स्वीकृतप्रार्थनोयं तत्र गत्वा व्याकरणमपाठयत् ।

एवमष्टाविंशतिवर्षदेशीयंवयः पूर्णतामियाय । सामाजिकेषु कार्येषु पदमधाच्च कविरत्नम् । प्रकारेणामुना विक्रमवत्सरे १९३७ माघशुक्लतृतीयायामवाप्य जनिं यत्र यत्र समये यथा यथा कार्यमकारि तत्तत्सर्वं १९६७ विक्रमवत्सरान्तं यथायथमवर्णि ।

## ग्रन्थरचनासमयः

यद्यपि सामान्यपद्यरचनानैपुण्यं त्रयोदशवर्षात्मके समयेऽनेन समासादितमासीत्, परं विशेषग्रन्थरचना पञ्चदशात्मकं वयः समासाद्य प्रारब्धाभूत् । सर्वत्र प्रागयं परापश्यन्तीमध्यमावैखरीतिभेदैश्चतुर्धावस्थिता ध्वनि-वर्ण-पद-वाक्यविग्रहां भगवतीं वाग्देवीमेवास्तौषीत् ।

पद्याधानोद्धरणमभ्यस्यतामुना वर्षमेकं प्रत्यहं शनैः पद्यैरेव समस्तमकारि कृत्यम्। पितुराज्ञया वैदिकं सारस्वतं मन्त्रं चाजपत्। अष्टावर्षदेशीयवयः समुपागते कविरत्ने माघकृष्णचतुर्दश्यां कर्णवासे पित्रार्धरात्रसमये सारस्वतमाज्यमाकण्ठगते जले दत्तमासीत्।

"मणिमन्त्रमहौषधितपःसमाधिजाः सिद्धयः"

इति योगसूत्रमनुसरतास्य पित्रा महौषधिजा सिद्धिरस्मै निभृतं दत्ता यस्याः कृपया प्रतिभाऽवर्धत। स्मृतिशक्तिरभूत्समुन्नता श्रुतमप्येकवारं हृदयस्थमभूत्किं पुनर्दृष्टम्।

गतवत्येवं बहुतिथे काले सर्वथा वशवर्तिनीं वाक्सिद्धिं विधाय सामाजिकविद्वज्जनमनोविनोदायाद्यावधि ये ये ग्रन्थाः प्रणीतास्ते ते मया नामनिर्देशपुरःसरं साम्प्रतं प्रदर्श्यन्ते। यथा:—

१—दयानन्ददिग्विजयं महाकाव्यम्
२—वैदिकसिद्धान्तवर्णनं महाकाव्यम्
३—विरजानन्दचरितं काव्यम्
४—भामिनीभूषणं काव्यम्
५—द्विजराजविजयं काव्यम्
६—आर्यशिरोभूषणकाव्यम्
७—दयानन्दलहरीकाव्यम्
८—आर्यनियमोदयकाव्यम्
९—ईश्वरस्तुतिकाव्यम्
१०—धर्मलक्षणवर्णनकाव्यम्
११—गुरुकुलोदयकाव्यम्
१२—विद्याविनोदकाव्यम्
१३—उपनयनवर्णनकाव्यम्
१४—विवाहोत्सववर्णनकाव्यम्
१५—आर्यवृत्तेन्दुचन्द्रिकाकाव्यम्
१६—परोपकारकल्पद्रुमकाव्यम्
१७—रमामहर्षिसंवादकाव्यम्
१८—ईशावतारखण्डनकाव्यम्
१९—वार्षिकोत्सवचम्पूकाव्यम्

२०—वैधव्यविध्वंसनचम्पूकाव्यम्
२१—दैवोपालम्भकाव्यम्
२२—वेदधर्मवर्णनशतक ( काव्यम् )
२३—शोकसम्मूर्च्छनकाव्यम्
२४—आर्यसंस्कृतगीतिकाकाव्यम्
२५—द्विजराजविजयचम्पूकाव्यम्
२६—द्विजराजविजयपताकाकाव्यम्
२७—विज्ञानोदयचम्पूकाव्यम्
२८—भारतमहिमावर्णनकाव्यम्
२९—आर्यविनोदकाव्यम्
३०—वैदिकधर्मविजयं ( नाटकम् )
३१—संस्कृतविद्यामन्दिरम्
३२—आर्यकुमारशिक्षासागरः
३३—पिङ्गलछन्दःसूत्रभाष्यम्
३४—काव्यलङ्कारसूत्रभाष्यम्
३५—महर्षिचरितादर्शः
३६—पाणिनीयसूत्रार्थप्रकाशः
३७—निरुक्तवैदिकभाष्यम्
३८—सत्यार्थप्रकाशानुवादः ( संस्कृते )

वर्तमानसमये यानि पुस्तकानि सम्पाद्यन्ते तेषां नामोल्लेखः पुस्तकान्तरे द्रष्टव्यः। उपरि दर्शितग्रन्थानामनुष्टुप्संख्यया पद्यसङ्कलना ९५००० एतन्मिता।

संक्षेपेणेदं महाकवेरस्य चरितं सर्वलोकावलोनायात्र विन्यस्तं मया विस्तरेण ग्रन्थान्तरे विन्यस्तं तत्ततएवालोचनीयम्।

सुबोधचन्द्रशर्म्मा

# ग्रन्थकार का परिचय

यह तो आप लोगों को विदित ही होगा कि—अनेक लोकलोकान्तरो मे अलङ्कृत इस धरातल में सर्वोत्तम समुद्र-वेष्टित, अनेक सुर-नर-मुनि-जन-सेवित भारतवर्ष ही है। जिसमें मर्यादापुरुषोत्तम श्रीरामचन्द्र जैसे धार्मिक महाराजा, पतञ्जलि जैसे महर्षि, सनक जैसे ब्रह्मवेत्ता, श्रीहर्ष जैसे कवि, कर्ण जैसे दानी, अर्जुन जैसे योद्धा, भीम जैसे बली, महर्षि दयानन्द सरस्वती जैसे परोपकारी उत्पन्न हुए।

## आर्यावर्त और ब्रह्मर्षिदेश

उसी भारतवर्ष में दोनो तरफ़ से विन्ध्य और हिमालय इन दोनो पर्वतो से नियमित, गङ्गा, यमुना, सरस्वती आदि नदियो से सुन्दर; भरद्वाज, वशिष्ठ, वाल्मीकि आदि महर्षियों से पवित्रित एक आर्यावर्त है जिसके अन्तर्गत कुरुक्षेत्र, मत्स्य, पञ्चाल, शूरसेन इन चार भागो में विभक्त एक ब्रह्मर्षि देश भी विद्यमान है।

## जन्मभूमि

उसी ब्रह्मर्षि देश में मत्स्य देश का तिलक, वेद-वेदाङ्गपारग, अनेक ब्राह्मण विद्वानो से अलङ्कृत एक बदायूँ प्रान्त है जिसके एक देश में भूतल का भूषण जैसा भागीरथी के अङ्क मे बसा हुआ यज्ञोपयोगि कुश पलाशयुक्त, द्विजराजविजयपताका के द्वारा सूचित सनाढ्य वंश एक चन्द्रनगर है। जिसमें साङ्गोपाङ्ग वेद के जाननेवाले, प्रतिदिन यज्ञ करनेवाले, दशलक्षण-लक्षित धर्म को पालनेवाले, ब्रह्मा के द्वारा स्थापित सनाढ्य वंश मे अनेक मुनि-जन समय समय पर उत्पन्न होते थे।

## वंश-परम्परा

उसी चन्द्रनगर मे अनेक गुणो से युक्त यम और नियमो के पालन करने वाले, अनेक ग्रन्थो के सम्पादक हमारे प्रपितामह पण्डित जवाहरलालजी हुए। ब्रह्मचर्य्य के अनन्तर गृहस्थाश्रम मे पदार्पण करते हुए उन्होंने अपने समान पण्डित भगीरथीलालजी को प्राप्त किया जो हमारे पितामह थे।

वे भी ब्रह्मचर्य्य के समाप्त होने पर दूसरे आश्रम में प्रविष्ट हुए और धर्म, अर्थ काम मोक्ष जैसे चार पुत्र उन्होंने प्राप्त किये। उन चार पुत्रों में से सबके लिए चाहने योग्य मोक्ष जैसे वैदिक धर्म के परिपालक मुनि-समाना-

चरण, निर्लोभता के अद्वितीय शरण, परोपकारव्रत, शम एवं दम के अद्वितीय अवलम्ब, त्याग के एक मात्र पात्र, सत्य के अनन्य आधार, सनाढ्य वंश के भूषण, मुनिवर पण्डित श्री टीकारामजी शास्त्री थे, जो हमारे पिता थे।

## पिताजी का वृत्तान्त

पण्डित टीकारामजी ग्यारह वर्ष की अवस्था से श्रीस्वामी दयानन्द सरस्वती के शिष्य थे। स्वामीजी ने ही कर्णवास मे आपका यज्ञोपवीत कराया था। तीन मास तक बराबर स्वय पढाया। फिर श्रीविरजानन्द सरस्वतीजी के पास मथुरा मे भेज दिया। वहाँ पर अष्टाध्यायी, महाभाष्य पढ करकाशी नवद्वीप आदि कई स्थलो मे छत्तीस वर्ष विद्योपार्जन करते रहे। अन्त मे अनेक विद्वानो के कहने पर श्रीमती "सुबुद्धि-देवी" से आपका विवाह हुआ जो कि प्रातः स्मरणीया, पतिव्रताओ मे अग्रगण्य, सस्कृतविद्या में अद्वितीय विदुषी आज कल चन्द्रनगर में विद्यमान है और सर्वदा सस्कृत में सम्भाषण करती हैं। पिताजी का विशेष वृत्तान्त अन्यत्र छपा है वहीं देखिए।

## ग्रन्थकार का जन्म

सवत् १९३७ माघ शुक्ला तृतीया को हुआ। आपके पिताजी के लिए आज के दिन कोई आनन्द बाकी न था इसलिए "दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात्" इस महाभाष्य वचन के अनुरोध से ग्यारहवें दिन आपका "अखिलानन्दशर्मा" नाम रक्खा गया।

## एकान्तवास

सात महीने तक आपने माताजी का स्तनपान किया, आठवें महीने से पिताजी ने आपको माता से अलग किया और गौ का दूध पिला कर गङ्गा के तट पर एकान्त मे रक्खा। कारण इसका यह था कि—अभी से सस्कार उत्तम हो। मलिन न हो, ससार की खराब ख़राब बातें देखने में न आवें, मूर्खो की आवाज कान में न पडने पावे आदि आदि।

## मातृभाषा संस्कृत

आपके माता-पिता ने आपके जन्म से कई वर्ष पहले ही सस्कृत में भाषण करने का निश्चय कर लिया था, ताकि भावी सन्तान की मातृभाषा सस्कृत बने। उसका परिणाम ऐसा ही हुआ। आपकी माताजी ने २८ वर्ष विद्याध्ययन और ब्रह्मचर्य्य-व्रत का पूर्ण रूप से पालन किया, यज्ञोपवीत और मेखला का धारण किया, साय-प्रातः ईश्वराराधन और हवनादि का नियम रक्खा।

आप के पिताजी पण्डित शिवकुमारजी शास्त्री के परम मित्र थे, इसलिए जब आप एक साल के हो गये तब पिताजी इनको काशी ले गये थे। आप की तोतली आवाज़ से निकला हुआ संस्कृत सुन कर पण्डित शिवकुमारजी आश्चर्य करने लगे और कहने लगे कि यह विलक्षण बात आजही देखने में आई।

## स्वामीजी का मिलना

यहाँ से चल कर फिर पिताजी ने आप को एक साल तक एकान्त में रख कर संस्कृत बोलना सिखाया, इतने ही में तीसरा वर्ष आरम्भ हुआ। पिताजी इनको श्री १०८ स्वामी दयानन्द सरस्वतीजी के पास ले गये। ले जाकर श्रीस्वामीजी से कहा कि "महर्षे! गृहस्थाश्रम का यह पहला फल आप के अर्पण है" इतना कह कर श्रीस्वामीजी के चरणों में लिटा दिया। इन दिनो स्वामीजी पूने में थे। महात्माओं के लिए भी दुर्लभ श्रीस्वामीजी के चरणारविन्दपराग आज आप के शरीर को पवित्र कर रहे थे। करुणा के एक मात्र आधार श्रीस्वामीजी ने भी कुछ देर तक पैरों में पड़े हुए आप को उठा कर गोद में लिया और इन के पिताजी से कहा कि जाओ एकान्त में रह कर इसको संस्कारी बनाओ। आज्ञा पाते ही पिताजी इनको लेकर चल दिये।

## दैवघटना

पूने से चल कर पिताजी इनको लेकर नर्मदा के तट पर चले गये। अकस्मात् कन्धे से फिसल कर आप एक पत्थर की चटान पर गिर गये। गिरने के साथ ही शिर के दो भाग ( कुछ आपस में जुडे हुए से ) हो गये। पिताजी इनके जीवन से हाथ धो बैठे परन्तु महर्षि का आशीर्वाद क्योंकर विफल होता। पिताजी इनको लेकर बम्बई पहुँचे। जाते ही गोकुलदास भाटिया के यहाँ जो कि मुम्बई के प्रसिद्ध रईस थे, इलाज होना आरम्भ हुआ। १५ दिन के अन्दर अन्दर आपका शिरोव्रण पूर्ण हुआ परन्तु एक चिह्न रह गया जो अब तक बाकी है।

## सामाचार-पत्रों में यश

आराम होने पर पिताजी इनको लेकर पण्डित गट्टूलालजी के यहाँ चले गये। यहाँ पर १५ दिन तक रहे। पण्डित गट्टूलालजी ने आपका स्पष्ट संस्कृत भाषण सुन कर मुम्बई के समाचारपत्रो में "त्रिवार्षिक पण्डितः" शीर्षक देकर आपका समस्त वृत्तान्त मुद्रित कराया। अन्त में वहां से पिताजी इनको लेकर अपने देश में आगये। जिस दिन आप मुम्बई से चले थे उस दिन चतुर्थ वर्ष का तृतीय दिवस था।

देश मे आकर पिताजी ने आपकी माता को भी अपने साथ लिया और गङ्गा के तट पर एकान्तवास करते हुए आपको सस्कारी बनाया। कुछ दिनो के बाद गङ्गा की रेती मे लिखते लिखते आपको वर्णपरिचय हो गया। इस समय आपकी अवस्था ४॥ वर्ष की थी।

## विचित्र घटना

आपकी जन्मभूमि "चन्द्रनगर" से चार कोस के फ़ासिले पर एक अमन्तिका नाम की झाड़ी है। वहाँ पर तीन सन्यासी माधवानन्द, ब्रह्मानन्द और रामानन्दजी रहा करते थे। आपके पिताजी उनके परममित्र थे। अकस्मात् एक दिन माधवानन्दजी ने कुमारिलभट्ट प्रणीत तन्त्र-वार्तिक के ९ श्लोक एक वार पढे। दुबारा आपने उनको क्रमशः वही श्लोक पढ कर सुना दिये। इस विचित्र घटना को देख कर माधवानन्दजी विस्मित हुए और आपके पिताजी से बहुत कुछ आग्रह के साथ कहने लगे कि इस बालक को हमें देदो। हम इसको शिष्य बना कर वेदान्त का पण्डित करेंगे। परन्तु पिताजी ने इनको न दिया।

## अनभ्र वज्रपात

कुछही दिन के बाद आपके समस्त शरीर पर "क्षुद्रपिटिका" चेचक निकलनी आरम्भ हुई। इसमें आपका शरीर अत्यन्त दुर्बल हो गया। जीभ पर छाले पडने से दूध भी न पी सके। एक मास तक यही हालत रही। देखने वाले जीवन से निराश हो गये। पिताजी का भी धैर्य डिगने लगा। परन्तु माताजी की आशा अभी तक स्थिर थी। ईश्वर की दया से पिञ्जरप्राय शरीर में फिर प्राण-सचार होने लगा। दूध का पीना आरम्भ हुआ। शनैः शनैः स्वस्थता वढने लगी।

## उपनयन

पञ्चम वर्ष के अन्त मे आपका कर्णवास मे उपनयन हुआ और ज्येष्ठ-पितृव्य पण्डित जीवारामजी से वेदारम्भ किया। फिर वहीं अपने गुरुकुल में, जो कि ३५ वर्ष से पण्डित जीवारामजी के अधिकार मे था, पढने लगे। कटिदेश में मौजी, मेखला तथा हाथ मे पलाशदण्ड और वस्त्रोपवस्त्रधारण, भूमिशयन. आदि आदि आपका उस समय का वेश था। अनध्यायो में पास लगे हुए राजघाट वेलोन, अनूपशहर आदि नगरो मे पिताजी के साथ जाकर भिक्षा लाते थे और उसी भिक्षान्न का आहार करते हुए आपने सामयिक व्यवहार का अनुष्ठान किया।

## पठनक्रम

सबसे पहले आपने अष्टाध्यायी का पाठ कण्ठस्थ किया। उसके बाद धातु-गण, उणादि और परिभाषा-पाठ कण्ठस्थ किया। उसके अनन्तर यजुर्वेद हस्तस्वर सहित कण्ठस्थ किया और आदिकाव्य "महाकाव्य" वाल्मीकि-प्रणीत रामायण, भगवद्गीता, अष्टावक्रगीता, मानवधर्मशास्त्र आदि सद्ग्रन्थों का अनध्यायों में अवलोकन करते रहे।

## ब्राह्मीप्रयोग

समय समय पर आपके पिता आपकी स्मरणशक्ति बढ़ाने के लिए तरह तरह के उपाय करते रहते थे। जब कि आपका दशवाँ वर्ष समाप्त हुआ और ग्यारहवें वर्ष के कुछ दिन व्यतीत हुए तब पिताजी ने ब्राह्मी के योग से बनाया हुआ एक प्रकार का घृत, माघकृष्ण चतुर्दशी को अर्धरात्रि के समय, गङ्गा में खड़ा करके पिलाया। पीने के साथही एक प्रकार का आश्चर्य मालूम होने लगा, मानो अन्धकार में प्रकाश का आविर्भाव हुआ हो। इसके अलावा ब्राह्मी का सेवन पिताजी इनको अधिक कराया करते थे।

## समय-परिवर्तन

इस प्रकार कुछ समय कर्णवास में व्यतीत हुआ। बचपन के साथ साथ उस समय के व्यवहार भी बदल गये। नई नई विलक्षण बातें सूझने लगीं। दैवयोग से एक दिन पूज्यपाद विरजानन्दजी के प्रधान शिष्य, व्याकरण के अगाध समुद्र श्री १०८ पण्डित युगलकिशोरजी शास्त्री कर्णवास पधारे थे। उन्होंने आपको संस्कारी जान कर अपने साथ मथुरा ले जाने के लिए पिताजी से अनुरोध किया। पिताजी ने आपका मथुरा जाना स्वीकार किया।

## पिताजी का कर्तव्य

आपके पिताजी आपको कदापि अपने से पृथक् नहीं करते थे यहाँ तक कि जब आप पाठ पढ़ने को जाया करते थे तब भी साथ साथ जाकर पाठ सुना करते थे। पाठ समाप्त होते ही फिर अलग लेजाते थे। वहाँ पर सामने बैठ कर सब पाठ कण्ठस्थ कराया करते थे। पाठ पढ़ाने के अलावा अध्यापक भी आपसे अन्य बातें नहीं कर सकते थे, औरों की तो बातही क्या! वास्तव में माता पिता का यही कर्तव्य होना चाहिए, जैसा कि आपके माता-पिता ने आपके साथ किया।

## मथुरा में जाना

मथुरा में जाते ही आपने श्री० प० युगलकिशोरजी से अध्ययन करना आरम्भ किया। अष्टाध्यायी का पाठ तो पहले ही कण्ठ था अब सूत्रों का अर्थ

और उदाहरण साथ साथ पढने लगे। प्रातः काल में अष्टाध्यायी का पाठ पढते रहे और सायंकाल मे खण्डनमण्डनपूर्वक सिद्धान्तकौमुदी का आशय देखा करते थे। इस प्रकार दोनो ग्रन्थो को पढते पढते अब तेरह वर्ष की आयु समाप्त हुई। चौदहवें वर्ष मे अष्टाध्यायी समाप्त कर महाभाष्य पढना आरम्भ किया। सोलहवें वर्ष में महाभाष्य समाप्त कर व्याकरण समाप्त किया।

## अपूर्व ग्रन्थों का लाभ

श्रीपण्डित युगलकिशोरजी के यहां श्रीविरजानन्दजी की बनाई हुई कुछ पुस्तकें थीं। उन्होने आपको उन पुस्तको का पात्र जान मानो व्याकरण का खजाना आपके सुपुर्द कर दिया। पुस्तकें ये थीं १—शब्दबोध व्याकरण। २—वाक्यमीमांसा। ३—पाणिनीय विवरण इनके अतिरिक्त और भी कई पुस्तकें थीं जो आपको दी गई। कुछ दिनों के बाद श्रीपण्डित युगलकिशोरजी का देहांत होगया।

## दैव की विचित्र महिमा

इधर श्रीपण्डित युगलकिशोरजी का स्वर्गवास हुआ, उधर अनूपशहर में साहित्य के अपार समुद्र अनेक काव्य, नाटकों के रचयिता लोक एवं शास्त्र विषयो के अभिज्ञ, निरभिमान, शातचित्त श्री १०८ पण्डित विष्णुदत्तजी आगये। आप कूर्माचलीय अलमोडा प्रान्त के रहने वाले हैं। आपने आपसे पढना आरम्भ किया।

## साहित्य-पठन

सबसे प्रथम आपने पिङ्गल छन्द सूत्र, छन्दःपीयूष, छन्दोमणिमाला, छन्दोमुक्तावली आदि बाईस ग्रन्थ इस विषय के पढे। साथही रचना का प्रकार भी सीखते रहे फिर काव्यालङ्कारसूत्र, काव्यप्रकाश, काव्यप्रदीप, दर्पण, साहित्य-कौमुदी, अलङ्कारकौस्तुभ, कठाभरण, रुद्रटालकार आदि १८ ग्रन्थ अलङ्कार के पढे। तदनन्तर पचमहाकाव्य, पचाख्यायिका, तेरह नाटक, चार चम्पू, तीन प्रहसन, दो सट्टक आदि ग्रन्थ पढे। इस प्रकार साहित्य के समस्त ग्रन्थ ८ वर्ष तक निरन्तर आपने श्रीविष्णुदत्तजी से पढे।

## पिताजी का देहान्त

साहित्य पढते पढते आपकी अवस्था २२ वर्ष की हुई। इसके बाद आपने कई उच्च परीक्षाये दीं, कई उच्च पद प्राप्त किये। अन्त में आपके पिताजी ने अपने कर्तव्य से मुक्त होकर लोकांतर का मार्ग लिया। पिताजी के स्वर्ग जाने पर आपको बडी चिन्ता हुई। परन्तु माताजी के अवलम्ब मे शोक अधिक

असर न कर सका। इसके बाद आपने कुछ दिन गङ्गा के तट पर पढाना आरम्भ किया। पढाते पढाते विद्या भी कंठस्थ होती गई, दर्शन-ग्रन्थो का अधिक विचार करने से समय भी निकलता मालूम न हुआ।

## विवाह

इस प्रकार कुछ समय व्यतीत हुआ। २५ वर्ष का ब्रह्मचर्य पूर्ण हुआ। अन्त में माताजी की आज्ञा मानकर आपने विवाह किया। आपका विवाह भी अनूपशहर के पण्डित गङ्गाप्रसादजी की सुपुत्री मालती देवी से हुआ। विवाह के अनन्तर दो वर्ष तक आपने सहस्रार्जुनपुर मे पढाना स्वीकार किया था। यहाँ पर आपके सम्बन्धी पण्डित नन्दकिशोरजी रहते है। उन्होने ही आपको यहाँ रक्खा था। यहाँ से आप एक वर्ष थमरवाँ रियासत में पढाने गये थे। यहाँ पर आपने श्रीयुत राय केदारनाथजी के सुपुत्र मुनीश्वर-नाथ को पढाया। इस प्रकार २८ वर्ष की अवस्था पूर्ण हुई। अब आपने सामाजिक कार्यों का आरम्भ किया।

## ग्रन्थसम्पादन

यद्यपि सामान्य रचना तो आप तेरह वर्ष की अवस्था से ही करते रहे परन्तु विशेष रचना आपने १५ वर्ष की अवस्था से आरम्भ की। सबसे प्रथम आपने सरस्वती का वर्णन किया जिसमे कि परा पश्यन्ती, मध्यमा, वैखरी और ध्वनि, वर्ण, पद, वाक्य इनको क्रमशः अंगी बनाकर रूपक से अच्छा दृश्य खींचा। २२ वर्ष की अवस्था तक आपने अपने अभ्यास को ऐसा पुष्ट बनाया कि एकबार बनाया हुआ पद्य दुबारा विचार के योग्य न हो अर्थात् ठीक ठीक शुद्ध बन जावे। इसके बाद आपने जो जो ग्रन्थ आज तक बनाये उनकी सूची संस्कृत में लिखे हुए आपके जीवन मे दी है, वहीं देखिएगा आज कल जो ग्रन्थ बन रहे है उनकी सूची ग्रन्थान्तर मे दीजावेगी। आज तक बनाये हुए ग्रन्थो की पद्य संख्या १५००० हजार है। विशेष वृत्तान्त आपके बडे जीवनचरित्र मे देखिए जो अन्यत्र लिखा गया है। यह आज तक का संक्षिप्त जीवन मैने लिखा है। इति—

सुबोधचन्द्रशर्मा

---

# विषयानुक्रमणिका

## प्रथमः सर्गः

अत्र च—सर्वतः प्राणीश्वरप्रणतिः। श्रीमतो महर्षेर्दयानन्दस्य निर्देशः। जगदीश्वरादस्य महाकाव्यस्य पूर्त्यै सहायप्रार्थनम्। महर्षेर्यशोविलासः। भारते तदाज्ञापालनम्। महर्षिसिञ्चितवेदव्रततिवृद्धिः। महर्षेरन्वर्थनामकत्वम्। महर्षिप्रतापासह्यता। महर्षेः सकाशाद्गुणानामुदयः। कल्पितशिवविष्णुविरिञ्चिभ्यो महर्षेर्योगबलस्याधिक्यम्। समस्तगुणकलङ्कितानिवृत्तिः। दर्शनरूपदर्पणशोकविलयः। महर्षेरुदयशैलता। महर्षिकर्तृकनानोपकारनिर्देशः। एतत्काव्यनिर्माणप्रयोजनम्, सर्गसङ्कलनञ्च। सर्गान्ते कवेराशीर्वाद इत्येतावन्तो विषया वर्णिताः।

## द्वितीयः सर्गः

अत्र च—काठियावाडदेशवर्णनम्। तद्गतजनव्यवहारनिर्देशः। महर्षेर्जन्मभूमिवर्णनम्। नगरसमृद्धिवर्णनम्। वंशवर्णनम्। तत्पितृवर्णनम्, मातृवर्णनञ्च। देशोपकारमनीषया मुक्तात्मनो महर्षेर्जन्मधारणसङ्कल्पः। गर्भगतस्य महर्षेः सङ्कल्पवर्णनम्। जन्मदिनवर्णनम्। नामकरणसंस्करणम्। बाललीलावर्णनम्। अक्षरारम्भवर्णनम्। यज्ञोपवीतवर्णनञ्चेत्येते विषया वर्णिताः।

## तृतीयः सर्गः

अत्र च-महर्षेर्विद्याध्ययनसङ्कल्पः। गृहाद्बहिर्गमनम्। पुरान्तरेऽमरत्वप्राप्तिविचारः। वेदाङ्गाध्ययनम्। आश्रमान्तरगमनाभिलापः। काषायवस्त्रधारणम्। सरस्वतीतटस्थितसिद्धपुरगमनम्। दण्डग्रहणकामनया ततोऽग्रे गमनम्। बान्धवसङ्गमः। तेभ्यो विमुक्तिः। दक्षिणदिग्गमनम्। वर्धमानपुरप्राप्तिः। चेतनमठगमनम्। नर्मदातटगमनम्। तत्र नवीनवेदान्तपठनम्। पूर्णानन्दसङ्गमः। सन्यासाश्रमधारणम्। योगविद्याभ्यासः। दण्डपरित्यागः। व्याकरणाध्ययनम्। इतस्ततो गत्वा नानाविद्योपार्जनम्। अर्बुदगिरिगमनम्। तत्र योगक्रियाभ्यासः। भवानीगिरिप्रस्थानम्। तत्र विद्योपार्जनम्। हरद्वारगमनम्। चण्डीपर्वतनिवासः। ऋषिक्षेत्रगमनम्। ततोऽग्रे टीरीनगरप्राप्तिः। तत्र तन्त्रग्रन्थावलोकनम्। केदारगिरिगमनम्। रुद्रप्रयागगमनम्। सिद्धाश्रम-

निवासः। गुप्तकाशीगमनम्। हिमालयारोहणम्। तुङ्गनाथगमनम्। बदरिकाश्रमगमनम्। पर्वतकूटारोहणम्। हिमालयादवतरणम्। सिद्धपथगमनम्। निजसिद्धान्तनिश्चितिः। रामपुरे रामगिर्याश्रमनिवासः। द्रोणसागरगमनम्। भागीरथीतटसेवनम्। नवीनयोगपरीक्षा। भागीरथीतटे भ्रमणम्। पुनर्नर्मदातटं प्रतिगमनम्। तत्र वर्षत्रयं निवासः। तत्रैव योगसाधनम्। पुनर्मथुरागमः। तत्र श्रीविरजानन्दपादेभ्यो विद्याधिगमः। दक्षिणादानम्। वरप्राप्तिश्चेत्येते विषया वर्णिताः।

## चतुर्थः सर्गः

अत्र च—दिग्विजयाशंसा। जगदीश्वरस्तवनम्। लोकदशासमीक्षणम्। कल्पितग्रन्थनिवारणनिश्चयः। मृतकश्राद्धनिराकरणनिश्चयः। जलमयतीर्थनिराकृतिनिश्चितिः। जडमूर्तिपूजानिराकरणनिश्चयः। समयोचितविचारपरम्परा। शाक्त-वैष्णव-शैव-गाणपत-मतसमुत्पत्तिमीमांसा। सत्पुरुषेषु दोषारोपणविचारः। पौराणिकमतसमीक्षा। अवतारवादमीमांसा। वेदानामपि मूर्तिकल्पना। मन्दिरगतपूजाविडम्बना। पौराणिकलीलाफलम्। दिग्विजयसाधनञ्चेत्येते विषया यथायथं वर्णिताः।

## पञ्चमः सर्गः

अत्र च—दिग्विजयारम्भः। तत्र समये मङ्गलपरम्परा। दिशा प्रसादः। सरस्वतीसमृद्धिः। सर्वतः प्रागर्गलपुरगमनम्। तत्र वैदिकधर्मोपदेशः। कैलासपर्वतसङ्गमः। सन्ध्यापुस्तकवितरणम्। रोगशान्तये योगाभ्यासः। ततो धवलपुरप्रस्थानम्। ततो लश्करगमनम्। तत्र राज्ञा सह संवादो वैष्णवादिमतखण्डनञ्च। तत्रैव शास्त्रार्थविज्ञापनवितरणम्। वैष्णवानां पराजयः। ततोऽग्रे करौलीनगरप्रस्थानम्। ततो जयपुरगमनम्। सिद्धसंवादः। तद्गतपण्डितानां पराजयः। राज्ञा सह सङ्गमः। तत्रैव जैनगुरुपराजयः। अत्र दत्तस्योपदेशस्य फलम्। भागवतखण्डनम्। वैष्णवमतनिराकरणम्। ततः कृष्णगढगमनम्। ततोऽजतुन्दगमनम्। ततः पुष्करगमनम्। तत्रावतारवादखण्डनम्। ३०० मितपण्डितानां पराजयः। कौमुद्यादिखण्डनम्। तत्रोपदेशफलम्। ततो योधपुरगमनम्। पुनरजतुन्दगमनम्। तत्र विज्ञापनदानम्, मतानां खण्डनञ्च। गौराङ्गसङ्गमः। तेन सह गोरक्षाविषये विचारः। तपस्वियुगलमानभङ्गः। पुनरर्गलपुरगमनम्। भूपसमाजे भागवतखण्डनम्। मथुरागमनम्। गुरोरन्तिमदर्शनम्। कुम्भोपलक्ष्ये हरद्वारगमनम्। पाखण्डखण्डिनोपताकारचनम्। विशुद्धानन्दपराजयः। सर्वस्वदानम्। भागीरथीतटे भ्रमणम्। कर्णवासगमनम्। तत्र शास्त्रार्थः। ततो रामघट्टगमनम्। पुनरनूपनगरगमनम्। अवहरगमनम्। तत्र गरलाशनम्। गरलदस्य बन्धनान्मोक्षः। विल्वयनगमनञ्चेत्येते विषया वर्णिताः।

